# स्वरसंपर्कि

## स्वरसंपर्कि सव्याख्यानम्

सोदात्तं निरुदात्तं च पदजातमिति द्विधा
अस्यान्वयः पदजातं द्विधा सोदात्तं निरुदात्तं चेति १
उदात्त एकस्सोदात्ते प्रचयोर्द्वित्रा अपि क्वचित्
सोदात्ते पदे प्रायः उदात्त एकः क्वचिद्वित्राप्युदात्ताः २
साग्रे वावान्वेतवैचाग्नासु यज्ञपतासु उ च
स्वारात्परे तूच्चसमा नित्यमेकपदे धृताः ३
एकपदे स्वारात्परे तु उच्चसमानित्यं धृता भवन्ति
धृताः प्रचया इत्यर्थः ४
एकपदे धृतं नीचमेकस्वरितयुग्द्विधा
निरुदात्तं द्विधा सर्वं नीचमेकस्वरितयुगिति ५
समे नीचं कुणानेषि वयस्या स्ववयस्य या
नीचं प्रकृत्या सकलमुदात्तादन्यदक्षरम् ६
सोदात्ते निरुदात्ते तु पदे न्यत्स्वरितात्तथा
सोदात्ते पदे उदात्तादन्यत्सकलमक्षरं प्रकृत्यानीचं विवति
७
प्राकृतौ निहतोदात्तौ धृतकम्पौ तु सांहितौ
नीचोच्चयोगजो नीचविकारश्चेति स द्विधा ८
अभ्येव त्वेति सून्नीयन्ते ग्निं सोग्निं द्वियोगजः

अनुदात्तविकारस्तु प्रणोदेवी वशाभवत् ९

धृतो नीचविकारः स्यात् क्यद्वोयन्त्र्यसिभूरसि

द्वियोगजप्राकृतयोस्वारयोः कम्पसंभवः १०

तेऽन्योन्यं पितृदेवत्यं ह्येतदस्मदित्यपि

स्वारोच्चनीचप्रचयाश्चत्वारोऽपि पदान्तिमे ११

पदान्तिमे स्वरे स्वरोच्चनीचप्रचयाश्चत्वारोऽपि भवन्ति

स्वरे पदादौ नीचोच्चौ १२

पदादौ तु स्वरे नीचोच्चावेव भवतः

तेषामैक्यमतोष्टधा १३

ततः कारणात्पदान्तपदादिवर्त्तिनां

स्वराणामैक्यमष्टधाभिद्यते स्वारोच्चयोरैक्यं १४

प्रचयोच्चयोरैक्यमिति १५

उच्चपराश्चत्वारोभेदास्वारनीचयोरैक्यं उच्चनीचयोरैक्यं

नीचयोरैक्यं प्रचयनीचयोरैक्यं इति १६

नीचपराश्चत्वारो भेदा इत्यष्टधा १७

सर्वैः पदादेरुच्चस्य एकाक्षरी भाव उच्चता

पदादेरुच्चस्य सर्वै स्वारोच्चनीचप्रचयैः पूर्वैरेकाक्षरी भावे

सति उच्चता भवति १८

उक्थ्येति सह रयेति धात्विन्द्रोदेवतास्वधि

सर्वे ते परनीचैक्ये स्थायिनः १९

सर्वे ते स्वारोच्चनीचप्रचयाः परनीचैक्ये स्थायिनो भवन्ति

क्वास्य । साश्विनोरेवाभवत् २०

अवन्त्वस्मान् २१

वियत्तोस्यां २२

उच्चपूर्वे क्वचित्तु न २३

उच्चपूर्वे परनीचैक्ये उच्चस्य स्थायित्वन्न भवति

उदात्तानामैक्यमुदेदःकाराणां परेण चेत् २४

नीचेनस्वरितोऽत्र स्यात् उदात्तानामुदेदः काराणां परेण

नीचेनैक्यञ्चेत् अत्र स्वरित स्यात् २५

सूद्गाता २६

एतेस्य २७

सोब्रवीत् २८

इवर्णस्यानिवर्णेन तथा स्यात् उवर्णस्योदात्तेनानिवर्णेन

परेण नीचैनैक्यञ्चेत्तथा स्यात् २९

न्येव । यन्त्र्यसि ३०

उदात्तादुत्तरन्नीचं स्वरितः स्यात्स उप्रणः ३१

धृतात्स्वरात्परे नीचाः ३२

एको द्वौ बहवो धृता भवन्ति ३३

स्वरेति प्रतिमीवति ३४

उदात्तात्स्वरिताद्वा तु स्यादनन्तरपूर्वयोः

स्वारप्रचययोर्नीचविकृत्योरनुदात्तता ३५
उदात्तात्स्वरिताद्वानन्तरपूर्वयो
स्वारप्रचययोर्नीचप्रकृत्योरनुदात्तता स्यात् ३६
दैवीं धियमजस्त्रन्त्वामिति क्यद्यावतीः क्यतीः
नैरन्तर्यकम्पयोग्यस्वारयोः कम्प्यते धरः ३७
कम्पयोग्यस्वारयोर्नैरन्तर्ये सति अधरः कम्प्यते
कूश्माराडादावुच्चपरस्वारः कम्पोचितस्तथा ३८
कूश्माराडादौ कम्पोचितस्वारः उदात्तपरश्चेत्तथा
कम्पोऽणुमात्रः कंपस्य स्वारस्यान्ते निहन्यते ३९
तच्छेषस्वार उच्चो वा व्यवस्थाप्यः परस्वरात्
कम्पस्य स्वारस्यान्ते कंपोऽणुमात्रो अनुदात्तः प्रयुज्यते ४०
तच्छेषः पूर्ववत्पूर्वभागः परस्वरवत्स्वार उच्चो वा
व्यवस्थाप्यः ४१

स्वरसंपर्किसंपूर्णम्

Reference:
Svara Saṁparki, pp. 49-50 in the Ātreya Śikṣā palm leaf bundle, Staats-Universitaets Bibliothek, Hamburg, Germany, Grantha script on palm leaves, 2 folios, Palm-leaf bundle III 8/133.